कथितं बहुधा तस्मै कृष्णद्वैपायनाय वै।
तत् सर्वं कथयिष्यामि प्रसादादेव तस्य वै ॥ १२ ॥
देवं सम्पूज्य विधिना जपेन्मन्त्रं त्रियम्बकम्।
मुच्यते सर्वपापैश्च सप्तजन्मकृतैरपि ॥ १३ ॥
संग्रामे विजयं लब्ध्वा सौभाग्यमतुलं भवेत्।
लक्षहोमेन राज्यार्थी राज्यं लब्ध्वा सुखी भवेत् ॥ १४ ॥
पुत्रार्थी पुत्रमाप्नोति नियुतेन न संशयः।
धनार्थी प्रयुते नैव जपेदेव न संशयः ॥ १५ ॥
धनधान्यादिभिः सर्वैः सम्पूर्णः सर्वमङ्गलैः।
क्रीड़ते पुत्रपौत्रैश्च मृतः स्वर्गे प्रजायते ॥ १६ ॥
नाटेन सदृशो मन्त्रो लोके वेदे च सुव्रताः!।
तस्मात् त्रियम्बकं देवं तेन नित्यं प्रपूजयेत् ॥ १७ ॥
अग्निष्टोमस्य यज्ञस्य फलमष्टगुणं भवेत्।
त्रयाणामपि लोकानां गुणानामपि यः प्रभुः ॥ १८ ॥
वेदानामपि देवानां ब्रह्मक्षत्रविशामपि।
अकारोकारमकाराणां मात्राणामपि वाचकः ॥ १९ ॥
तथा सोमस्य सूर्य्यस्य वह्नेरग्नित्रयस्य च।
अम्बा उमा महादेवो ह्यम्बकस्तु त्रियम्बकः ॥ २० ॥
सुपुष्पितस्य वृक्षस्य यथा गन्धः सुशोभनः।
वातिदूरात्तथा तस्य गन्धः शम्भोर्महात्मनः ॥ २१ ॥
तस्मात् सुगन्धो भगवान् गन्धारयति शङ्करः।
गान्धारश्च महादेवो देवानामपि लीलया ॥ २२ ॥
सुगन्धस्तस्य लोकेऽस्मिन् वायुर्वाति नभस्तले।
तस्मात् सुगन्धिस्तं देवं सुगन्धिं पुष्टिवर्द्धनम् ॥ २३ ॥

यस्य रेतः पुरा शम्भोर्हरेर्योनौ प्रतिष्ठितम् ।
तस्य वीर्य्यादभूदण्डं हिरण्मयमजोद्भवम् ॥ २४ ॥
चन्द्रादित्यौ सनक्षत्रौ भूर्भुवः स्वर्महस्तपः ।
सत्यलोकमतिक्रम्य पुष्टिवीर्य्यस्य तस्य वै ॥ २५ ॥
पञ्चभूतान्यहङ्कारो बुद्धिः प्रकृतिरेव च ।
पार्श्वमस्य तथैव तस्माद्वै पुष्टिवर्द्धनः ॥ २६ ॥
तं पूजयामि देवेशं घृतेन पयसा तथा ।
मधुना यवगोधूममाषबिल्वफलेन च ॥ २७ ॥
कुमुदार्कशमीपत्रगौरसर्षपशाल्मिभिः ।
हुत्वा लिङ्गे यथा न्यायं भक्त्या देवं यजामहे ॥२८॥
तथैनानेन मां पाशाद् बन्धनात् कर्मयोगतः ।
मृत्योश्च बन्धनाच्चैव मोक्षीय भवतेजसा ॥ २९ ॥
उर्वारुकफलानां यथा कालाद्भूतं पुनः ।
तथैव कालः सम्प्राप्तो मन्त्रेण तेन यत्नतः ॥ ३० ॥
एवं मन्त्रविधिं ज्ञात्वा शिवलिङ्गं समर्चयेत् ।
तस्य पाशक्षयोऽतीव योगिनो मृत्युनिग्रहः ॥ ३१ ॥
त्रियम्बकसमो नास्ति देवो वा घृणयान्वितः ।
प्रसादशीलः प्रीतश्च तथा मन्त्रोऽपि सुव्रताः ! ॥३२॥
तस्मात् सर्वं परित्यज्य त्रियम्बकमुमापतिम् ।
त्रियम्बकेन मन्त्रेण पूजयेत् सुसमाहितः ॥ ३३ ॥
सर्वावस्थां गतो वापि मुक्तोऽयं सर्वपातकैः ।
शिवध्यानान्न सन्देहो यथा रुद्रस्तथा स्वयम् ॥ ३४॥
हत्वा भित्वा च भूतानि भुक्त्वा चान्यायतोऽपि वा ।
शिवमेकं सकृत् स्मृत्वा सर्वपापैः प्रमुच्यते ॥ ३५ ॥

# पञ्चपञ्चाशत्तमोऽध्यायः ।

ऋषय ऊचुः ।

कथं त्रियम्बको देवो देवदेवो वृषध्वजः ।
ध्येयः सर्वार्थसिद्ध्यर्थं योगमार्गेण सुव्रत ! ॥ १ ॥
पूर्वमेवापि निखिलं श्रुतं श्रुतिसमं पुनः ।
विस्तरेण च तत् सर्वं सङ्क्षेपाद् वक्तुमर्हसि ॥ २ ॥

सूत उवाच ।

एवं पैतामहे नैवनन्दी दिनकरप्रभः ।
मेरुपृष्ठे पुरा पृष्टो मुनिसङ्घैः समावृतः ॥ ३ ॥
सोऽपि तस्मै कुमाराय ब्रह्मपुत्राय सुव्रताः ! ।
मिथः प्रोवाच भगवान् प्रणताय समाहितः ॥ ४ ॥

नन्दिकेश्वर उवाच ।

एवं पुरा महादेवो भगवान्नीललोहितः ।
गिरिपुत्राख्यया देव्या भगवत्येकशय्यया ॥ ५ ॥
पृष्टः कैलासशिखरे हृष्टपुष्टतनूरुहः ।

श्रीदेव्युवाच

योगः कतिविधः प्रोक्तस्तत् कथञ्चैव कीदृशम् ॥ ६ ॥
ज्ञानञ्च मोक्षदं दिव्यं मुच्यन्ते येन जन्तवः ।

श्रीभगवानुवाच ।

प्रथमो मन्त्रयोगश्च स्पर्शयोगो द्वितीयकः ॥ ७ ॥
भावयोगस्तृतीयः स्यादभावश्च चतुर्थकः ।
सर्वोत्तमो महायोगः पञ्चमः परिकीर्त्तितः ॥ ८ ॥
ध्यानयुक्तो जपाभ्यासो मन्त्रयोगः प्रकीर्त्तितः ।
नाड़ीशुद्ध्यधिको यस्तु रेचकादिक्रमान्वितः ॥ ९ ॥
समस्तव्यस्तयोगेन जयो वायोः प्रकीर्त्तितः ।

वर्णमिरक्रियायुक्तो धारणाद्येश्च शोभनः॥ १०॥
धारणात्वष्टमन्त्रोसौ भेदत्रयविशोधकः।
कुम्भकावस्थितोऽभ्यासः स्पर्शयोगः प्रकीर्त्तितः॥ ११॥
मन्त्रस्पर्शविनिर्मुक्तो महादेवं समाश्रितः।
बहिरन्तर्विभागस्थः स्फुरत्संहरणात्मकः॥ १२॥
भावयोगः समाख्यातश्चित्तशुद्धिप्रदायकः।
विलीनावयवं सर्वं जगत् स्थावरजङ्गमम्॥ १३॥
शून्यं सर्वं निराभासं स्वरूपं यत्र चिन्त्यते।
अभावयोगः संप्रोक्तश्चित्तनिर्वाणकारकः॥ १४॥
नीरूपः केवलः शुद्धः स्वच्छन्दश्च सुशोभनः।
अनिर्देश्यः सदा लोकः स्वयं वेद्यः समन्ततः॥ १५॥
स्वभावो भासते यत्र महायोगः प्रकीर्त्तितः।
नित्योदितः स्वयं ज्योतिः सर्वचित्तसमुत्थितः॥ १६॥
निर्मलः केवलो ह्यात्मा महायोग इति स्मृतः।
अणिमादिप्रदाः सर्वे सर्वे ज्ञानस्य दायकाः॥ १७॥
उत्तरोत्तरवैशिष्ट्यमेषु योगेष्वनुक्रमात्।
अहं सङ्गविनिर्मुक्तो महाकाशोपमः परः॥ १८॥
सर्वावरणनिर्मुक्तो अचिन्त्यः स्वरसेन तु।
ज्ञेयमेतत् समाख्यातमग्राह्यमपि दैवतः॥ १९॥
प्रविलीनो महान् सम्यक् स्वयं वेद्यः स्वसाक्षिकः।
चकास्त्यानन्दवपुषा तेन ज्ञेयमिदं मतम्॥ २०॥
परीक्षिताय शिष्याय ब्राह्मणायाहिताग्नये।
धार्मिकायाकृतघ्नाय दातव्यं क्रमपूर्वकम्॥ २१॥
गुरुदेवतभक्ताय अन्यथा नैव दापयेत्।

निन्दितो व्याधितोऽल्पायुस्तथा चैव प्रजायते ॥ २२ ॥
दातुरप्येवमनघे तस्मात् ज्ञात्वैव दापयेत् ॥
सर्वसङ्गविनिर्मुक्तो मद्भक्तो मत्परायणः ॥ २३ ॥
साधको ज्ञानसंयुक्तः श्रौतस्मार्त्तविशारदः ।
गुरुभक्तश्च पुण्यात्मा योग्यो योगरतः सदा ॥ २४ ॥
एवं देवि ! समाख्यातो योगमार्गः सनातनः ।
सर्ववेदागमाम्भोजमकरन्दः सुमध्यमे ! ॥ २५ ॥
पीत्वा योगामृतं योगी मुच्यते ब्रह्मवित्तमः ।
एवं पाशुपतं योगं योगैश्वर्यमनुत्तमम् ॥ २६ ॥
अत्याश्रममिदं ज्ञेयं मुक्तये केन लभ्यते ।
तस्मादिष्टैः समाचारैः शिवार्चनरतैः प्रिये ! ॥२७॥
इत्युक्त्वा भगवान् देवी मनुज्ञाप्य वृषध्वजः
शङ्कर्णं समासाद्य युयोजात्मानमात्मनि ॥ २८ ॥

शैलादि रुवाच ।

तस्मात्त्वमपि योगीन्द्र ! योगाभ्यासरतो भव ।
स्वयम्भुवः परा मूर्त्तिर्नूनं ब्रह्ममयी वरा ॥ २९॥
तस्मात् सर्वप्रयत्नेन मोक्षार्थी पुरुषोत्तमः ।
भस्मस्नायी भवेन्नित्यं योगी पाशुपते रतः ॥ ३० ॥
ध्येया यथाक्रमेणैव वैष्णवी च ततः परा ।
माहेश्वरी परा पश्चात् सैव ध्येया यथाक्रमम् ॥ ३१॥
योगेश्वरस्य या निष्ठा सैषा संहृत्य वर्णिता ॥ ३२ ॥

सूत उवाच ।

एवं शिलादपुत्रेण नन्दिना कुलनन्दिना ।
योगः पाशुपतः प्रोक्तो भस्मनिष्ठेन धीमता ॥ ३३ ॥
सनत्कुमारो भगवान् व्यासायामिततेजसे ।
तस्मादहमपि श्रुत्वा नियोगात् सत्रिणामपि ॥ ३४ ॥
कृतकृत्योऽस्मि विप्रेभ्यो नमो यज्ञेभ्य एव च ।
नमः शिवाय शान्ताय व्यासाय मुनये नमः ॥ ३५ ॥

ग्रन्थैकादशसाहस्रं पुराणं लैङ्गमुत्तमम् ।
अष्टोत्तरशताध्यायमादिमांशमतः परम् ॥ ३६ ॥
षट्चत्वारिंशदध्यायं धर्मकामार्थमोक्षदम् ।
अथ ते मुनयः सर्वे नैमिषेयाः समाहिताः ॥ ३७ ॥
प्रणेमुर्देवमीशानं वीतिकण्टकितत्वचः ।
शाखां पौराणिकीमेवं कृत्वैकादशिकां प्रभुः ॥ ३८ ।
ब्रह्मा स्वयम्भूर्भगवानिदं वचनमब्रवीत् ।
लैङ्गमाद्यन्तमखिलं यः पठेत् शृणुयादपि ॥ ३९ ॥
द्विजेभ्यः श्रावयेद्वापि स याति परमां गतिम् ।
तपसा चैव यज्ञेन दानेनाध्ययनेन च ॥ ४० ॥
या गतिस्तस्य विपुला शास्त्रविद्या च वैदिकी ।
कर्मणा चापि मिश्रेण केवलं विद्ययापि वा ॥ ४१ ॥
निवृत्तिश्चास्य विप्रस्य भवेद्भक्तिश्च शाश्वती ।
मयि नारायणे देवे श्रद्धा चास्तु महात्मनः ॥ ४२ ॥
वंशस्य चाक्षया विद्या चाप्रमादश्च सर्वतः ।
इत्याज्ञा ब्रह्मणस्तस्मात्तस्य सर्वं महात्मनः ॥ ४३ ॥

ऋषयः प्रोचुः ।

ऋषेः सुतस्य चास्माकमेतेषामपि चास्य च ।
नारदस्य च या सिद्धिस्तीर्थयात्रारतस्य च ॥ ४४ ॥
प्रीतिश्च विपुला यस्मादस्माकं रोमहर्षण ! ॥ ४५ ॥
सा सदास्तु विरूपाक्षप्रसादात्तु समन्ततः ।
एवमुक्त्वा च विप्रेषु नारदो भगवानपि ॥ ४६ ॥
कराभ्यां सुशुभाग्राभ्यां सूतं पस्पर्शवान् त्वचि ।
स्वस्त्यस्तु सूत ! भद्रं ते महादेवे वृषध्वजे ॥ ४७ ॥
श्रद्धा तथास्तु चास्माकं नमस्तस्मै शिवाय च ॥ ४८ ॥
इत्यादि महापुराणे श्रीलैङ्गे उत्तरार्द्धे पञ्चपञ्चा-
शत्तमोऽध्यायः समाप्तः ॥ ५५ ॥

समाप्तमिदं लैङ्गोत्तरार्द्धं ।

